# *श्री गंगा स्तोत्रम्*

*( श्री शंकराचार्य कृत )*

देवी सुरेश्वरी भगवती गंगे त्रिभुवनतारिणी तरलतरंगे ।
शंकरमौली विहारिणी विमले मम मतिरास्तां तव पदकमले ॥ 1 ॥

भागीरथी सुखदायिनी मातस्तव जलमहिमा निगमे ख्यातः ।
नाहं जाने तव महिमानं पाहि कृपामयि मामज्ञानम् ॥ 2 ॥

हरिपदपादद्य तरंगिणी गंगे हिमविधुमुक्ता धवलतरंगे ।
दूरीकुरु मम दुष्कृतिभारं कुरु कृपया भवसागरपारम् ॥ 3 ॥

तव जलममलं येन निपीतं परमपदं खलु तेन गृहीतम् ।
मातर्गंगे त्वयि यो भक्तः किल तं द्रष्टुं न यमः शक्तः ॥ 4 ॥

पतितोद्धारिणी जाह्नवी गंगे खण्डित गिरिवर मण्डित भंगे ।
भीष्मजननी हे मुनिवरकन्ये पतितनिवारिणी त्रिभुवन धन्ये ॥ 5 ।

कल्पलतामिव फलदां लोके प्रणमति यस्त्वां न पतति शोके ।
पारावार विहारिणी गंगे विमुख युवति कृत तरलापांगे ॥ 6 ॥

तव चेन्मातः स्रोतः स्नातः पुनरपि जठरे सोऽपि न जातः ।
नरकनिवारिणी जाह्नवी गंगे कलुष विनाशिनी महिमोत्तुंगे ॥ 7 ॥

पुनरसदंगे पुण्यतरंगे जय जय जाह्नवी करुणापांगे ।
इन्द्रमुकुटमणिराजित चरणे सुखदे शुभदे भृत्यशरण्ये ॥ 8 ॥

रोगं शोकं तापं पापं हर मे भगवती कुमतिकलापम् ।
त्रिभुवनसारे वसुधाहारे त्वमसि गतिर्मम खलु संसारे ॥ 9 ॥

अलकानन्दे परमानन्दे कुरु करुणामयि कातरवन्द्ये ।
तव तटनिकटे यस्य निवासः खलु वैकुण्ठे तस्य निवासः ॥ 10 ॥

वरमिह नीरे कमठो मीनः किं वा तीरे शरटः क्षीणः ।
अथवा श्वपचो मलिनो दीनस्तव न हि दूरे नृपतिकुलीनः ॥ 11 ॥

भो भुवनेश्वरी पुण्ये धन्ये देवी द्रवमयि मुनिवरकन्ये ।
गंगास्तवमिमममलं नित्यं पठति नरो यः स जयति सत्यम् ॥ 12 ॥

येषां हृदये गंगा भक्तिस्तेषां भवति सदा सुखमुक्तिः ।
मधुराकान्ता पंझटिकाभिः परमानन्दकलित ललिताभिः ॥ 13 ॥

गंगास्तोत्रमिदं भवसारं वांछित फलदं विमलं सारम् ।
शंकरसेवक शंकररचितं पठति सुखी स्तव इति च समाप्तम् ॥ 14 ॥